॥ श्रीगणाध्यक्षस्तोत्रं ईक्ष्वाकुकृत ॥

भरद्वाज उवाच
कथं स्तुतो गणाध्यक्षस्तेन राज्ञा महात्मना ।
यथा तेन तपस्तप्तं तन्मे वद महामते ॥ १॥

सूत उवाच
चतुर्थीदिवसे राजा स्नात्वा त्रिषवणं द्विज ।
रक्ताम्बरधरो भूत्वा रक्तगन्धानुलेपनः ॥ २॥

सुरक्तकुसुमैर्हृद्यैर्विनायकमथार्चयत् ।
रक्तचन्दनतोयेन स्नानपूर्वं यथाविधि ॥ ३॥

विलिप्य रक्तगन्धेन रक्तपुष्पैः प्रपूजयत् ।
ततोऽसौ दत्तवान् धूपमाज्ययुक्तं सचन्दनम् ।
नैवेद्यं चैव हारिद्रं गुडखण्डघृतप्लुतम् ॥ ४॥

एवं सुविधिना पूज्य विनायकमथास्तवीत् ।
इक्ष्वाकुरुवाच
नमस्कृत्य महादेवं स्तोष्येऽहं तं विनायकम् ॥ ५॥

महागणपतिं शूरमजितं ज्ञानवर्धनम् ।
एकदन्तं द्विदन्तं च चतुर्दन्तं चतुर्भुजम् ॥ ६॥

त्र्यक्षं त्रिशूलहस्तं च रक्तनेत्रं वरप्रदम् ।
आम्बिकेयं शूर्पकर्णं प्रचण्डं च विनायकम् ॥ ७॥

आरक्तं दण्डिनं चैव वह्निवक्त्रं हुतप्रियम् ।
अनर्चितो विघ्नकरः सर्वकार्येषु यो नृणाम् ॥ ८॥

तं नमामि गणाध्यक्षं भीममुग्रमुमासुतम् ।
मदमत्तं विरूपाक्षं भक्तिविघ्ननिवारकम् ॥ ९॥

सूर्यकोटिप्रतीकाशं भिन्नाञ्जनसमप्रभम् ।
बुद्धं सुनिर्मलं शान्तं नमस्यामि विनायकम् ॥ १०॥

नमोऽस्तु गजवक्त्राय गणानां पतये नमः ।
मेरुमन्दररूपाय नमः कैलासवासिने ॥ ११॥

विरूपाय नमस्तेऽस्तु नमस्ते ब्रह्मचारिणे ।
भक्तस्तुताय देवाय नमस्तुभ्यं विनायक ॥ १२॥

त्वया पुराण पूर्वेषां देवानां कार्यसिद्धये ।
गजरूपं समास्थाय त्रासिताः सर्वदानवाः ॥ १३॥

ऋषीणां देवतानां च नायकत्वं प्रकाशितम् ।
यतस्ततः सुरैरग्रे पूज्यसे त्वं भवात्मज ॥ १४॥

त्वामाराध्य गणाध्यक्षं सर्वज्ञं कामरूपिणम् ।
कार्यार्थं रक्तकुसुमै रक्तचन्दनवारिभिः ॥ १५॥

रक्ताम्बरधरो भूत्वा चतुर्थ्यामर्चयेज्जपेत् ।
त्रिकालमेककालं वा पूजयेन्नियताशनः ॥ १६॥

राजानं राजपुत्रं वा राजमन्त्रिणमेव वा ।
राज्यं च सर्वविघ्नेश वशं कुर्यात् सराष्ट्रकम् ॥ १७॥

अविघ्नं तपसो मह्यं कुरु नौमि विनायक ।
मयेत्थं संस्तुतो भक्त्या पूजितश्च विशेषतः ॥ १८॥

यत्फलं सर्वतीर्थेषु सर्वयज्ञेषु यत्फलम् ।
तत्फलं पूर्णमाप्नोति स्तुत्वा देवं विनायकम् ॥ १९॥

विषमं न भवेत् तस्य न च गच्छेत् पराभवम् ।
न च विघ्नो भवेत् तस्य जातो जातिस्मरो भवेत् ॥ २०॥

य इदं पठते स्तोत्रं षड्भिर्मासैर्वरं लभेत् ।
संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥ २१॥

सूत उवाच
एवं स्तुत्वा पुरा राजा गणाध्यक्षं द्विजोत्तम ।
तापसं वेषमास्थाय तपश्चर्तुं गतो वनम् ॥ २२॥

उत्सृज्य वस्त्रं नागत्वक्सदृशं बहुमूल्यकम् ।
कठिनां तु त्वचं वाक्षीं कट्यां धत्ते नृपोत्तमः ॥ २३॥

तथा रत्नानि दिव्यानि वलयानि निरस्य तु ।
अक्षसूत्रमलङ्कारं फलैः पद्मस्य शोभनम् ॥ २४॥

तथोत्तमाङ्गे मुकुटं रत्नहाटकशोभितम् ।
त्यक्त्वा जटाकलापं तु तपोऽर्थे विभृयान्नृपः ॥ २५॥

इति ।

नरसिंहपुराण अध्याय २५ श्लोकसंख्या ७२
श्रीनरसिंहपुराणे इक्ष्वाकुचरिते पञ्चविंशोऽध्यायः ॥ २५॥